इन्द्रियाणां सुखार्थेन वृथा जन्मकथं नयेत् । स्थाल्यां वैडूर्यमय्यां हि पच्यते चौषधं यथा
दह्यते चागदस्तद्वद्वृथा जन्मकथं भवेत् । निधानं च गृहे क्षिप्त्वा शुभःसेवांकथंचरेत्
त्यक्त्वा वैकुण्ठनाथं तमन्यमार्गे कथं रमेत् । भक्तिहीनैश्चतुर्वेदैःपठितैःकिं प्रयोजनम्
श्वपचो भक्तियुक्तस्तु त्रिदशैरपि पूज्यते । स्वकरैकङ्कणं बद्ध्वा दर्पणैः किंप्रयोजनम्
ब्रह्मरुद्रादिभिर्देवैर्दत्तैश्वर्याश्च सेवकाः । अर्पितं नैव गृह्णन्ति प्रभोश्चैव तु किञ्चन ॥

अकिञ्चनाय भक्ताय दातुं नालं गतो वरम् ।
निःशरीरस्य कृष्णस्य तत्र ध्यानं कथं भवेत् ॥ १०१ ॥
साकारं वहवो दृष्ट्वा गता भक्त्या च तत्पदम् ।
पूजाभक्तिः कथं शून्ये साकारे कथ्यते बुधैः ॥ १०२ ॥
शून्यमार्गे कथं याति आधारेण विना नरः ।
साकारो यः स्वयं स्वामी निराकारः स वै प्रभुः ॥ १०३ ॥

साकारो हि सुखेनैव निराकारो न दृश्यते । सेवारसश्च साकारे निराकारेण वै रसः
साकारेण निराकारो ज्ञायते स्वयमेव हि । हरिस्मृतिप्रसादेन रोमाञ्चिततनुर्यदा ॥
नयनानन्दसलिलं मुक्तिर्दासी भवेत्तदा । बाल्ये च यत्कृतं पापं तत्कथं न विनश्यति
पूजादानव्रतैस्तीर्थैर्जपहोमैस्त्वदर्पितैः । निजधर्मं परित्यज्य तपोघोरं कथं चरेत् ॥
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । विधिं सन्त्यज्य शास्त्रीयं तपोघोरं कथंचरेत्

आश्रमेण विना मूढो नैव सिद्धिमवाप्नुयात् ।
ब्रह्मणा निर्मिता वर्णाः स्वे स्वे धर्मे नियोजिताः ॥ १०६ ॥

स्वधर्मेणागतं द्रव्यं शुक्लद्रव्यं तदुच्यते । शुक्लद्रव्येण यद्दानं दीयते श्रद्धयान्वितम् ॥
स्वल्पेनाऽपि महापुण्यं तस्य सङ्ख्या न विद्यते । नीचसङ्गेन यद्द्रव्यमानीतं गृहकर्मसु
तेन द्रव्येण यद्दानं कृतं वै मनुजादिभिः । तत्फलं न भवेत्ते वै नैव तत्फलभागिनः ॥
यादृशं कुरुते कर्म इन्द्रियाणां सुखेच्छया । तादृशीं योनिमाप्नोति मूढो हि ज्ञानवर्जितः
इह यत्कुरुते कर्म तत्परत्रोपभुज्यते । पुण्यमाचरतः पुंसो यदि दुःखं प्रजायते ॥११४
तदा तापो न कर्त्तव्यस्तत्कर्म पूर्वदेहजम् । पापमाचरतः पुंसो जायते सुखमेव च ॥

न कर्त्तव्यस्तदा हर्षः सुखे तत्र सुरेश्वरि । रज्जुबद्धाश्च पशवः प्रभुणास्वेच्छया यथा
नीयन्ते कर्मबन्धेन मनुजा अपि भूतले । शाखामृगो वनचरो नृत्यते च गृहेगृहे ॥११७
एवं च कर्मणा जीवा नीयन्ते सर्वयोनिषु । क्रीडताकन्दुको यद्वत्प्रेर्यते प्रभुणेच्छया॥
कर्मणा वा तथा जन्तुर्नीयते सुखदुःखयोः । प्राणी स्वकर्मभिर्बद्धो न शक्तो बन्धनिग्रहे
देवा वै कर्मभिर्बद्धा ऋषयश्च तथा परे । कैलासे रुद्रदेहस्था भुजगा विषभोजिनः॥१२०
असमर्थाः सुधां भोक्तुं कर्मयोनिर्बलीयसी । नीरोगदेहदाता यो बुधैःसूर्यो हि कथ्यते
तद्रथे सारथिः पङ्गुःकर्मयोनिर्बलीयसी । इन्द्रद्युम्नो हि राजर्षिर्गजत्वं कर्मणा गतः ॥
समर्थस्वामिना तस्मिन्कर्मयोनिर्वृथा कृता । रुद्रब्रह्मादयो देवा मानवाश्चासुराश्च ये
ते सर्वे कर्मबद्धाश्च विचरन्ति महीतले । कर्माधीनं जगत्सर्वं विष्णुना निर्मितं पुरा
तत्कर्म केशवाधीनं रामनाम्ना विनश्यति । सर्वत्राऽपि स्थितं तोयं मुक्तिदं तु सितासिते
एवमाचरतां कर्म मुक्तिदं केशवार्चनम् । इन्द्रियाणां सुखार्थाय यः कर्म मनसा चरेत्
अहं कृतेन मन्येत केवलं देहमेव हि । मनसा संस्मरञ्जन्तुः प्रायश्चित्तं समाचरेत् ॥१२७
स पूर्वकर्मभोक्ता च अग्रे कर्म न वर्धते । प्रशंसन्ति ग्रहान्केचित्केचित्प्रेतपिशाचकान्

केचिद्देवान्प्रशंसन्ति ह्योषधीः केचिदूचिरे ।
केचिन्मन्त्रं च सिद्धिं च केचिद्बुद्धिं पराक्रमम् ॥१२९॥

उद्यमं साहसं धैर्यं केचिन्नीतिं बलं तथा । अहं कर्म प्रशंसामि सर्वे कर्मानुवर्तिनः ॥
इति मे निश्चिता बुद्धिः कथ्यते पूर्वसूरिभिः । यदा पुण्यमयो जन्तुः पापं किञ्चिन्न विद्यते
ज्ञानं हि द्विविधं चैव तदा पुण्यं सुखं भवेत् । पापं पुण्यं समं यस्य तदा कर्मसु विद्यते
समं योगं यदा द्वन्द्वं तदानन्दपदं व्रजेत् । बाह्ये सर्वपरित्यागी मनसा संस्पृही भवेत्

तद्वृथाचरितं तस्य तेन तत्पापभोगिनः ।
बाह्ये करोति कर्माणि मनसा निःस्पृहो भवेत् ॥ १३४ ॥
त्यागोऽसौ मध्यमो ज्ञेयो न तु पूर्णफलं लभेत् ।
बाह्यमध्ये परित्यज्य बुद्ध्याशून्यावलम्बनम् ॥ १३५ ॥

त्यागः स उत्तमो ज्ञेयो योगिनामपि दुर्लभः । क्रोधात्सर्वं त्यजन्त्येके केचिद्वादप्रभावतः

कष्टात्सर्वं त्यजन्त्येके त्यागाः सर्वे तु मध्यमाः ।
सुबुद्ध्या श्रद्धया युक्तो न क्रोधादिवशं गतः ॥१३७॥
कर्मणा ह्यवलिप्तोऽपि सुगतिं याति मानवः । शुचीनां श्रीमतां गेहे धीमतां योगिनामपि
योगाद्भ्रष्टस्तु जायेत कुले वै द्विजपूर्वके । स्वल्पेनैव तु कालेन पूर्णयोगं च विन्दति
चिदानन्दपदं गच्छेद्योगभक्तिप्रसादतः । पङ्केनैवयथापङ्कं रुधिरं रुधिरेण वै ॥
हिंसया कर्मणा कर्म कथं क्षालयितुं क्षमः । हिंसाकर्ममयो यज्ञः कथं कर्मक्षये क्षमः ॥
स्वर्गकामकृता यज्ञाः स्वर्गं ते चाल्पसौख्यदाः ।
अनित्यानि तु सौख्यानि भवन्ति च बहून्यपि ॥ १४२ ॥
नित्यं सौख्यं न तेष्वस्ति विना भक्त्या हरेः क्वचित् ।
सार्वभौमसुखं राज्यं स्वर्गे चाऽपि तथा सुखम् ॥ १४३ ॥
अन्यत्किञ्चिन्न वाञ्छामि गर्भवासाद्विभेम्यहम् ।
ग्रावा वै भिद्यते लोहैर्माणिक्यं नैव भिद्यते ॥ १४४ ॥
नानाकाममयी बुद्ध्या विष्णुभक्तिर्नभिद्यते । वकोजलचरान्भुङ्क्तेमण्डूकादींश्च वर्जयेत्
तथा यमः सर्वहन्ता वर्जयेत्कृष्णसेवकान् । यो रक्षति स हर्ता च स वै पालकउच्यते
अपराधशतैर्युक्तं स्वस्थाने नय मामितः । यथाकृतापराधस्य कृष्णस्तस्य कृपाकरः ॥
फलं च लभते वाद्यरक्षकः किङ्करोति चेत् । एवमात्मा च देहेऽस्मिन्परवश्यकृपाकरः
प्राप्तो न पारःशनकैर्मल्लैर्युक्तानवापिता । व्याधस्य मुक्तिदाताचकुब्जकातारितास्वयम्
ब्रह्माद्यैर्दुर्लभः स्वप्ने सुलभो गोपमन्दिरे ।
गोपोच्छिष्टं यदा भुक्तं तदा ते तारिताःस्वयम् ॥ १५० ॥
योगिभिर्गीयते नित्यं परमात्मा जनार्दनः । अव्ययः पुरुषः श्रीमान्द्रष्टा तैर्देवि
एतत्स्मरणकं दिव्यं ये पठन्ति दिनेदिने । सर्वपापविनिर्मुक्ता यान्ति विष्णोः
अनयाभावबुद्ध्या च पठनं विष्णुसन्निधौ । इह लोके सुखं भुक्त्वा परं पदमवा

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
विष्णुस्मरणं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

इति श्रीपाद्मपुराणे

षष्ठे उत्तर खण्डे

पूर्वार्द्धं समाप्तम्

शुभमस्तु सतां सदा



